# वैतान सूत्र

अथ वितानस्य ब्रह्मा कर्मणि ब्रह्मवेदविद्दक्षिणतो विधिवदुपविशति वाग्यतः १ होमानादिष्टाननुमन्त्रयते २ मन्त्रानादेशे लिङ्गवतेति भागलिः । प्रजापते न त्वदेतान्यन्य इति युवा कौशिकः । यथादेवतमिति माठरः । ओं भूर्भुवः स्वर्जनदो३मित्याचार्याः ३ प्रधानहोममन्त्रान्पुरस्ताद्धोमसंस्थितहोमेष्वावपन्त्येके ४ वाचयति यजमानं भृग्वङ्गिरोविदा संस्कृतम् ५ अग्निराहवनीयः ६ संचरवाग्यमौ ब्रह्मवद्यजमानस्य ७ देवता हविर्दक्षिणा यजुर्वेदात् ८ आग्नीध्रस्योत्तरत उपाचारः स्फ्यसंमार्गपाणेस्तिष्ठतो दक्षिणामुखस्य ९ यथास्वरमस्तु श्रौ३षडिति प्रत्याश्रावणम् १० यजमानो ऽमावास्यायां पूर्वेद्युरुपवत्स्यद्भक्तमश्नात्यपराह्णे ११ आहवनीयगार्हपत्यदक्षिणाग्निषु ममाग्ने वर्च इति समिधो ऽन्वादधाति विभागम् १२ व्रतमुपैति व्रतेन त्वं व्रतपत इति । अनशनमित्यादि १३ ममाग्ने वर्च इति चतसृभिर्देवताः परिगृह्णाति । सिनीवालि पृथुष्टुक इति मन्त्रोक्ताम् १४ अन्वद्य न इति पौर्णमास्याम् १५ प्रातर्हुत्वाग्निहोत्रं कुहूं देवीं यत्ते देवा इत्यमावास्यायाम् । राकामहं पूर्णा पश्चादिति पौर्णमास्याम् १६ अथ ब्रह्माणं वृणीते भूपते भुवनपते भुवां पते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति १७ वृतो जपत्यहं भूपतिरहं भुवनपतिरहं भुवां पतिरहं महतो भूतस्य पतिस्तदहं मनसे प्रब्रवीमि मनो वाचे वग्गायत्र्यै गायत्र्युष्णिह उष्णिगनुष्टुभेऽनुष्टुब्बृहत्यै बृहती पङ्क्त्ये पङ्क्तिस्त्रिष्टुभे त्रिष्टुब्जगत्यै जगती प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्य ओं भूर्भुवः स्वर्जनदो३मिति । अप्रतिरथं च १८ जीवाभिराचम्येत्यादि प्रपदनान्तम् १९ उत्तरतो ऽग्नेर्दक्षिणतो ऽपराग्निभ्यां प्रपद्यासादं वीक्ष्याहे दौधषव्य इत्याद्या द्यावापृथिव्योः समीक्षणात् २० १

यत्र विजानाति ब्रह्मन्नपः प्रणेष्यामीति तत्र प्रणय यज्ञम् । देवता वर्धय त्वम् । नाकस्य पृष्ठे स्वर्गे लोके यजमानो अस्तु । सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों भूर्भुवः स्वर्जनदों३ प्रणयेति यथास्वरमनुजानाति । एवं सर्वत्रानुज्ञापदमाद्यन्तयोः १ प्रणीतासु

प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनात् २ यदि वदेद्वैष्णवीं जपेत् ३ आग्नीध्रो ऽन्वाहार्याधिश्रयणाद्वेदिं परिसमुह्योत्करदेशे निदधाति । स्तम्बयजुषो द्वितीयपुरीषे प्रहृते ऽवस्तभ्नाति चाररो दिवं मा पप्त इति ४ बृहस्पते परिगृहाणेति वेदिं परिगृह्यमाणामनुमन्त्रयते ५ आशासाना सौमनसमिति पत्नीं संनह्यमानाम् ६ घृतं त अग्न इत्याज्ये निरुप्यमानेऽग्निं परिस्तृणीहीति वेदिं परिस्तृणन्तम् ७ यस्यां वृक्षा इति परिधीन्निधीयमानान् ८ ऋषीनां प्रस्तरो ऽसीति प्रस्तरम् ९ आसादितेषु हविःषूक्तान्पुरस्ताद्धोमाञ्जुहोति । अभिचारेष्वाभिचारिकान् । संस्थितहोमांश्च १० अग्नेर्मन्व इति सामिधेनीरनुमन्त्रयते ११ प्रजापते न त्वदेतान्यन्य इति प्राजापत्यमाधारम् १२ अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति प्रेषित आग्नीध्रः स्प्यमग्निं च संमार्गमन्तरा कृत्वा परिधीन्मध्यमदक्षिणोत्तरान्त्रिस्त्रिः संमार्ज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं संमार्ज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं संमार्ज्मीति संमार्गेणार्वाञ्चमग्निमुपवाजयति वाजं त्वाग्ने जेष्यन्तं सनिष्यन्तं संमार्ज्मि वाजं जयेति १३ इन्द्रेममित्यैन्द्रमाघारम् १४ प्रवरे प्रव्रियमाणे वाचयेद्देवाः पितर इति तिस्रः १५ ग्रीष्मो हेमन्त इति प्रयाजान् १६ अहं जजानेत्याज्यभागौ १७ २

येनेन्द्रायेत्याग्नेयम् १ मा वनिं मा वाचमित्यैन्द्राग्नम् २ सांनाय्यस्यैन्द्रं माहेन्द्रं वेन्द्रेमं त्वमिन्द्रस्त्वं महेन्द्र इति ३ पौर्णमास्यामाग्नेयाग्नीषोमीयावन्तरोपांशुयाजमग्नीषोमीयमस्मै क्षत्रमिति । नामावास्यायामविधानात् ४ आ देवानामिति सौविष्टकृतम् ५ इष्टे स्विष्टकृति वाचं यच्छत्यानुयाजानां प्रसवात् ६ प्राशित्रं यवमात्रमधस्तादुपरिष्टाद्वाभिघारितमग्रेणाध्वर्युः परिहरति ७ तत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष इति प्रतीक्षते ८ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा प्रतिगृह्णामीति प्रतिगृह्णाति ९ तद्व्युह्य तृणानि प्राग्दण्डं स्थण्डिले निदधाति पृथिव्यास्त्वा नाभौ सादयामीति १० अग्नेष्ट्वास्येनात्मास्यात्मन्नात्मानं मे मा हिंसीः स्वाहेत्यनामिकाङ्गुष्ठाभ्यां दन्तैर-

नुपस्पृशन्प्राश्नाति ११ प्राशितमनुमन्त्रयते योऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्टस्तस्मिन्म एतत्सुहुतमस्तु प्राशित्रं तन्मा मा हिंसीत्परमे व्योमन्निति १२ पात्राण्यद्भिर्मार्जयित्वा प्राणान्संस्पृशते १३ वाङ्म आसन्नसोः प्राणश्चक्षुरक्ष्णोः श्रोत्रं कर्णयोर्बाह्वोर्बलमूर्वोरोजो जङ्घयोर्जवः पादयोः प्रतिष्ठा । अरिष्टानि मे सर्वाङ्गानि सन्तु तनूस्तन्वा मे सहेति नाभिम् १४ इडैवास्मानितीडामुपहूयमानामनुमन्त्रयते १५ आग्नीध्रः षडवत्तं प्राश्नाति पृथिव्यास्त्वा दात्रा प्राश्नाम्यन्तरिक्षस्य त्वा दिवस्त्वेति १६ उप त्वा देव इतीडाभागं प्रतिगृह्येन्द्र गीर्भिरिति प्राश्नन्ति १७ अपो दिव्या इति तिसृभिः पवित्रवति मार्जयन्ते १८ यजमानोऽन्वाहार्यम-न्तर्वेद्याम् १९ प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्टा अमुत्रामुष्मिंल्लोक इह च प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मे धेहि कुर्वतो मे मा क्षेष्टा ददतो मे मोपदसः प्रजापतिमहं त्वया समक्षमृध्यासमित्यभिमन्त्र्यर्त्विग्भ्यो द-दाति दक्षिणाम् २० प्रतिगृह्य क इदमित्युक्तम् २१ संप्रेषित आग्नीध्रः २२ ३

एधोऽसीति समिद्वत्या समिधमाधाय सकृत्सकृत्परिधीन्संमाष्टर्यग्ने वाजजिद्वाजं त्वा ससृवांसं वाजजितं संमार्ज्मीति १ अग्निं च प्राञ्चं वाजं त्वाग्ने जिगीवांसं ससन्वांसं संमार्ज्मि वाजमजैरिति २ मनो ज्योतिर्जुषतामाज्यमरिष्टं यज्ञं समिमं तनोतु बृहस्पतिः प्रतिगृह्णातु नो । विश्वे देवास इह मादयन्तामित्यनुयाजान् ३ ये देवा दिवि ष्ठेत्यनुवषट्कारम् ४ नुदस्व कामेति स्रुचौ विप्रणुद्यमाने अनुमन्त्रयते ५ सं बर्हिरक्तमिति प्रस्तरं प्रह्रियमाणम् ६ संस्रावभागा इति संस्रावम् ७ न घ्रंस्तताप सं वर्चसा देवानां पत्नीः सुगार्हपत्य इति पत्नीसंयाजान् ८ दक्षिणाग्निहोमान् । तृतीय उलूखले मुसल इति ७ आग्नीध्रः संमार्गमग्नौ प्रहरति यो अग्नाविति १० वि ते मुञ्चाम्यहं वि ष्यामि प्र त्वा मुञ्चामीति पत्नीं योक्त्रेण विमुच्यमानामनुमन्त्रयते ११ वेदः स्वस्ति-रिति वेदं विचृतति १२ यानावह इति षड्भिः संस्थितहोमाञ्जुहोति

१३ प्रणीता विमुच्यमानाः सस्त्रुषीरित्यनुमन्त्रयते १४ येषां प्रयाजा इति यजमानमाशास्ते १५ यदन्नमिति भागं प्राश्य देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि स मां कर्मण्यं पाहीत्याह यजमानः १६ उदपात्रेऽञ्जला- वासिक्ते सं वर्चसेति मुखं विमार्ष्टि १७ अन्तरेणापराग्नी दक्षिणेनाग्निं विष्णुक्रमादीक्षणान्तम् १८ अग्ने गृहपत इति गार्हपत्यमुपतिष्ठते १९ यस्योरुष्वित्याहवनीयमभिव्रज्य प्राणापानावोजोऽसीत्युक्तम् २० अयं नो अग्निरिति द्वाभ्यामुपस्थाय स यज्ञपतिराशिषेति भागं प्राश्नाति २१ व्रतानि व्रतपतय इति व्रतविसर्जनीमादधाति २२ एतस्माद्याजमा- नादृतेऽपि सिद्धिः । तदपि श्लोकौ वदतः

प्रवर्ग्यो याजमानानि पत्नीमन्त्राश्च तन्त्रयम
अङ्गं च यज्ञे भवत्यृते चैभ्योऽपि सिध्यति

प्रवर्ग्याच्छौर्यमाप्नोति यजमानेन चाशिषः
पत्नीमन्त्रैः प्रजामायुस्तस्मात्तेनैव सिध्यतीति २३

दर्शपूर्णमासौ त्रिंशतं वर्षाणि । पञ्चदश दाक्षायणयज्ञः २४ पौर्णमास्यां पौर्णमासमपरेद्युश्च । एवममावास्यायाम् २५ संवत्सरं वा २६ सा- कंप्रस्थाय्यादीनि चैताभ्यामिष्टयो व्याख्याताः २७ ४

इत्यथर्ववेदे वैतानसूत्रे प्रथमोऽध्यायः समाप्तः

अथाग्न्याधेयम् १ वसन्ते ब्राह्मणस्य । ग्रीष्मे राजन्यस्य । वर्षासु वैश्यस्य । त्रीणि पर्वाणीत्युक्तम् २ यदैव कदाचिदादध्याच्छ्रद्धा न्वेवैनं नातीयात् ३ उक्तो ब्रह्मौदनः ४ ऋत्विज उपसादयति ५ अभिमन्त्रितं वादध्यात् ६

यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा
तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह

जातवेदो भुवनस्य यद्रेत इह सिञ्च तपसो यज्जनिष्यते
अग्निमश्वत्थादधि हव्यवाहं शमीगर्भाज्जनयन्यो मयोभूरिति

मन्त्रोक्ते अरणी गृह्णन्तमाधास्यमानं वाचयति ७ वाग्यता जाग्रतो रात्रिमासतेऽपररात्रं वा ८ बृहस्पते सवितरिति स्वपतो बोधयेत् ७ उषसि शान्त्युदकं करोति चित्यादिभिराथर्वणीभिः कपुर्विपर्वारोदाकावृक्कावतीनाडानिर्दहन्तीभिराङ्गिरसीभिश्च । चातनैर्मातृनामभिर्वास्तोष्पत्यैरनुयोजितैः १० तेनाग्निपदमश्वं स्नापयन्नभ्युक्षञ्छमयत्यनुदित उदिते वाधास्यमानः ११ आकृतिलोष्टेत्याद्युपस्थानान्तम् १२ यत्त्वा क्रुद्धा इत्युपोद्धरन्त्याचार्या आहवनीयदक्षिणाग्न्योर्लक्षणान्तम् १३

पुरीष्योऽसि विश्वभरा अर्थवा त्वा प्रथमो निरमन्थदग्ने
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम्
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयं रणेरण इति

मथ्यमानमनुमन्त्रयते १४ जातं सुजातं जातवेदसमिति १५ जातरूपेणान्तर्धाय । नासिक्येनोष्मणास्येन वा । मय्यग्र इत्येतयापानति ३६ अश्वपादं लक्षणे निधाप्यमानं समध्वरायेत्यनुमन्त्रयते १७ रथेनाग्नौ प्रणीयमानेऽश्वेऽन्वारब्धं वाचयति १८ १ ५

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्

यदक्रन्दः सलिले जातो अर्वन्त्सहस्वान्वाजिन्बलवान्बलेन
तं त्वादधुर्ब्रह्मणे भागमग्रे अथर्वाणः सामवेदो यजूंषि

ऋग्भिः पूतं प्रजापतिरथर्वणेऽश्वं प्रथमं निनाय
तस्य पदे प्रथमं ज्योतिराददे स मा वहाति सुकृतां यत्र लोकः

अभितिष्ठ पृतन्यतो मह्यं प्रजामायुश्च वाजिन्धेहि
त्वया वधेयं द्विषतः सपत्नान्स्वर्गं मे लोकं यजमानाय धेहि

अभितिष्ठ पृतन्यतः सहस्व पृतनायतः
यथाहमभिभूः सर्वाणि तानि धूर्वतो जनानिति १

आहवनीयदक्षिणाग्नी गार्हपत्यात्सह प्रणीयमाणौ व्याकरोमीत्यनुम-न्त्रयते २ आहितमाहवनीयमायं गौरित्युपतिष्ठते ३ दक्षिणाग्निर्निर्मथ्य आहार्यो वा ४ सभ्यावसथ्ययोराहवनीयाद्विहारः । सभ्याद्वा-वसथ्यस्य । सभ्यः सभायौ । आवसथ्य आवसथाय ५ अग्निपदमश्वं रथं चातुष्प्राश्यां हिरण्यं च ब्रह्मणे ददाति ६ अग्निं त्वाहुर्वैश्वानरं स दहन्प्रदहन्वगाः । स नो देवत्राधि ब्रूहि मा रिषामा वयं तवेत्यश्वं श-मयित्वा यदक्रन्द इत्युपाकुरुते ७ इन्द्रस्यौजो मरुतामनीकमिति रथमभिहुत्वा वनस्पते वीड्वङ्ग इत्यातिष्ठति ८ उपविश्य पूर्णहोममुप त्वा नमसेति ९ इदमुग्रायेत्यन्वक्तानक्षान्विदेवनायाध्वर्यवे प्रयच्छति १० आग्न्याधेयिकीष्विष्टिष्वग्नेः पवमानस्य पावकस्य शुचेरदितेरिति पवमानः पुनातु त्वेषस्तेऽग्नी रक्षांस्यदितिर्द्यौरिति ११ यजमानो द्वादशरात्रमुपवत्स्यद्भक्तमित्युक्तम् १२ ब्रह्मचारी व्रत्यधो ऽग्नीनुपशेते १३ २ ६

सायं प्रातरग्निहोत्रम् १ गवीडां दोहयित्वाग्निहोत्रमधिश्रयति २ अभि-ज्वाल्य समुद्धान्तमद्भिः प्रत्यानीयोदगुद्वासयति ३ अग्निपरिस्तरणं पर्यु-क्षणमृतं त्वेति ४ गार्हपत्यादाहवनीयमुदकधारां निनयत्यमृतमस्यमृ-तममृतेन संधेहीति ५ स्रुक्स्रुवं प्रक्षालितं प्रतपति निष्टप्तमिति ६ स्रुवेण स्रुचि ग्रहानुन्नयति ७ समिदुत्तरां स्रुचं मुखसंमितामुदृह्याह-वनीयमभिप्रक्रामतीदमहं यजमानं स्वर्गं लोकमुन्नयामीति ८ बर्हिषि निधाय समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वतीमिति ९ सूर्यज्योतिषमिति प्रातः प्रदीप्ता-मभिजुहोति १० सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो

अग्निर्वेतु स्वाहेति । सजूरुषसेति जुषाणः सूर्य इति प्रातः ११ अयं मा लोकोऽनुसंतनुतामिति गार्हपत्यमवेक्ष्य प्रजापते न त्वदेतान्यन्य इति मनसैव पूर्णतरामुत्तरां जुहोति १२ स्रुवं त्रिरुदञ्चमुन्नयति रुद्रान्प्रीणामीति १३ बर्हिषि निधायोन्मृज्योत्तरतः पाणी निमाष्टर्योषधिवनस्पतीन्प्रीणामीति १४ द्वितीयमुन्मृज्यपित्र्युमवीतं कृत्वा दक्षिणतः पितृभ्यः स्वधां करोमीत्यपराग्नयोः काम्यम् १५ अग्निहोत्रं नित्यमित्याचार्याः १६ गार्हपत्ये समिधमाधाय स्थाल्याः स्रुवेण जुहोतीह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजापतिः । अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति १७ उक्तोत्तरा १८ दक्षिणाग्नावग्नयेऽन्नादायान्नपतये स्वाहेति पूर्वा १९ सत्यं त्वर्तेनेति पर्युक्ष्य स्रुवं स्रुचं बर्हिश्चोत्तरेणाग्निं निदधाति २० स्रुक्शेषं प्राश्नाति २१ प्राणान्प्रीणामीत्युपस्पृश्य । गर्भानिति द्वितीयम् । विश्वान्देवानित्यन्ततः सर्वम् । अप्रक्षालितयोदकं स्रुचा निनयति सर्पेतरजनानिति । बर्हिषि प्रक्षाल्य सर्पपुण्यजनानिति द्वितीयम् । गन्धर्वाप्सरस इत्यपरेण तृतीयम् २२ सप्तर्षीनिति स्रुवं स्रुचं च प्रतितपति २३ दक्षिणान्नयामीति स्रुग्दण्डमवमार्ष्टि । प्रातरुन्मार्ष्टि २४ ब्राह्मणोक्तमग्न्युपस्थानम् २५ अथ गवीडादिभ्रेषे तस्यै तस्यै देवतायै जुहुयात् २६ ३ ७

त्रयोदश्यामाग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारिप्समानोऽग्नाविष्णू इति १ पूर्वं पौर्णमासमारभमाणः सरस्वत्यै च चरुं सरस्वते द्वादशकपालं सरस्वति व्रतेषु यस्य व्रतमिति २ आधानाद्वृद्धिश्चेदर्वाक्संवत्सराद्रोहिण्यामुत्सृज्याग्निहोत्रं पुनर्वस्वोः पुनरादधीतों भूर्भुवः स्वर्जनदोमिति ३ ओषधीषु पक्वास्वाग्रयणेष्टिः ४ इदावत्सरायेति पुरस्ताद्धोमसंस्थितहोमेष्वावपेत ५ अग्न इन्द्र इत्याग्नेन्द्रम् । ऐन्द्राग्नं चेदिन्द्राग्नी अस्मानिति ६ यद्विद्वांसो द्यावापृथिवी उपश्रुत्या सोमो वीरुधामिति वैश्वदेवद्यावापृथिवीयसौम्यान् ७ फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुञ्जीत ८ पूर्वेद्युर्वैश्वानरपार्जन्येष्टिर्वाग्ने वैश्वानराभि क्रन्द स्तनयेति ९ वैश्वदेवे निर्मथ्यं प्रहृतं भवतं नः समनसावित्यनुमन्त्रयते

१० अग्नावग्निरिति होमम् ११ एवं निर्मन्थनम् १२ आग्नेयं सौम्यं सावित्रं सारस्वतं पौष्णं मारुतं वैश्वदेवं द्यावापृथिवीयमग्निर्वनस्पतीनां सोमो विरुधां सविता प्रसवानां सरस्वति व्रतेषु प्रपथे पथां मरुतः पर्वतानां विश्वे देवा मम द्यावापृथिवी दात्राणामिति १३ वाजिनस्या- र्वाचीनं वसुविदमिति १४ तस्य प्राणभक्षान्भक्षयन्ति होत्रध्वर्युब्र- ह्माग्नीध्राः । प्रत्यक्षं यजमानः । मिथः समुपहूय १५ यन्मे रेतः प्रसिध्यति यद्वा मे अपगच्छति यद्वा जायते पुनस्तेन मा शिवमाविश ॥ तेन मा वाजिनं कृणु तेन सुप्रजसं कृणु तस्य ते वाजिपीतस्योपहूतो भक्षयामीति प्रकृतिः १६ आषाढ्यां वरुणप्रघासेष्वग्न्योः प्रणीयमान- योरग्ने प्रेहीति जपन्नेति १७ दक्षिणमग्निमुपविशति १८ पुरस्ताद- तिव्रज्योत्तरेऽग्नौ हुत्वा दक्षिणे जुहोति १९ अतिचारं पृष्टां पत्नीमिदमापः प्र वहतेति मार्जयन्ति २० पौष्णान्तान्पञ्च २१ ऐन्द्राग्नं वारुणं मारुतं कायं वरुणोऽपां य आत्मदा इति २२ अवभृथसोमादन्तरेण वेदी वि- ष्णुक्रमाः २३ ४ ८

कार्त्तिक्यां साकमेधाः १ पूर्वेद्युरिष्ट्यामग्नेरनीकवतोऽचिक्रददिति । मध्यंदिने सांतपनानां मरुतां सांतपना इदमिति । सायं गृहमेधिनां तिग्ममनीकमिति २ आज्यभागादीडान्ता ३ श्वो भूते पूर्णादर्वि पूर्णा दर्शं इति ४ क्रीडिनां मरुतां कृष्णं नियानमिति ५ माहेन्द्र्यां षडैन्द्राग्नान्तान् ६ महेन्द्रं वैश्वकर्मणं ये भक्षयन्त इति ७ पित्र्या- यामाज्यभागान्तं दैवावृत्सोमाय पितृमते पितृभ्यः सोमवद्भ्यो वा बर्हिषदः पितर उपहूता नः पितरोऽग्निष्वात्ताः पितरोऽग्नये कव्य- वाहनायेति ८ पुरस्ताद्धोमान्दक्षिणाग्नेरतिप्रणीते जुहोति ९ दक्षिणे- नाग्निमतिक्रम्य प्रत्यङुपविशति । उत्तरेण यजमान आग्नीध्रश्च १० अस्तु स्वधेति प्रत्याश्रावयति ११ तदपि श्लोकौ वदतः पित्र्यायां प्रा- ङ्मुखो ब्रह्मा हुत्वा होमान्पुरोगमान् गत्वा तु दक्षिणेनाग्नेः प्रत्यङासीद कर्मणि ॥ आग्नीध्रो यजमानश्चोत्तरेण तु तावुभौ अस्तु स्वधेति कर्त्तव्यं प्रत्याश्रावणमत्र त्विति १२ इडामवजिघ्रति १३ परिषिक्ते दैवावृ-

च्छंय्वन्ता १४ विमितान्निष्क्रामन्तो जपन्त्यया विष्ठेति १४ प्राञ्चो-ऽभ्युत्क्रम्योदस्य केतव इत्यादित्यमुपतिष्ठन्ते १६ दक्षिणाञ्चो दिवं पृथिवीमित्यग्नीन् १७ अथोदञ्चश्चतुष्पथे त्रैयम्बकं यो अग्नाविति यजमानार्यजनात् १८ सव्यहस्तपुरोडाशा दक्षिणानूरूनाघ्नानास्त्रिः प्रसव्यमग्निमनुपरियन्ति त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति १९ दक्षिणहस्तपुरोडाशाः प्रदक्षिणम् २० मूतयोः प्रमुक्तयोर्यो नः स्व इति जपति २१ दक्षिणावृत आव्रजन्ति २२ अथादित्येष्टिः २३ फाल्गुन्यां शुनासीर्यम् २४ पुनःप्रयोगे पूर्वेद्युः २५ पौष्णान्तान्पञ्च २६ वायव्यं शुनासीर्यं सौर्यमेकया च शुनासीरेह सूर्यश्चक्षुषामिति २७ ५ ९

अथ पशौ वैष्णवं पूर्णहोममुरु विष्णो इति १ अरातीयोरिति यूपं वृश्चयमानमनुमन्त्रयते २ यत्त्वा शिक्व इति प्रक्षाल्यमानम् ३ अञ्जते व्यञ्जत इत्यभ्यज्यमानम् ४ स्वाक्तं म इत्याज्यमानम् ५ यत्ते वास इति परिधाप्यमानम् ६ वनस्पते स्तीर्णमिति बर्हिष्यासाद्यमानम् ७ वनस्पतिः सह यस्यां सदैत्युच्छ्रीयमाणम् ८ धर्ता ध्रियस्वेति पादेनावटे निधीयमानम् ९ विष्णोः कर्माणीति द्वाभ्यामुच्छ्रितम् १० समिद्धो अद्येति प्रयाजान् ११ नाराशंसिनां देवो देवेष्विति द्वितीयम् १२ ऊर्ध्वा अस्येतीष्टकाः १३ पशावानयैतमित्याद्याञ्जनान्तम् १४ इन्द्राय भागमिति यथादेवतम् १५ य ईश इति प्रमुच्यमानमनुमन्त्रयते १६ नीयमाने प्रमुच्यमानहोमाञ्जुहुयात् प्रमुच्यमानो भुवनस्य गोप पशुर्नो अत्र प्रति भागमेतु अग्निर्यज्ञं त्रिवृतं सप्ततन्तुं देवो देवेभ्यो हव्यं वहतु प्रजानन् ॥ यौ ते दंष्ट्रौ रोपयिष्णू जिह्मायेते दक्षिणा सं च पश्यतः अनाष्ट्रं नः पितरस्तत्कृणोत यूपे बद्धं मुमुचिम यदन्नम् ॥ अहस्तस्त्वमभि जुष्टः परेहीन्द्रस्य गोष्ठमपि धाव विद्वान् धीरासस्त्वा कवयः संमृजन्त्विषमूर्जं यजमानाय दत्त्वेति १७ शाम्यमाने प्रदक्षिणमावर्तन्ते १८ वपाया जातवेदो वपयेति शंभुमयोभुभ्यां चात्वाले मर्जयन्ति १९ ऐन्द्राग्नं पुरोदाशमावदानिकं च २० संप्रेषित आग्नीध्रः शामित्रादौपयजान-

ङ्गारान्होतुः पुरस्तान्निवपति २१ हृदयशूल उपमितेऽप्सु ते राजन्निति जपन्ति २२ ऐन्द्राग्नेनेष्ट्वा काम्यः पशुः २३ ६ १०

इत्यथर्ववेदे वैतानसूत्रे द्वितीयोऽध्यायः समाप्तः

सोमेन यक्ष्यमाण ऐन्द्राग्नमुस्त्रमालभेत यस्य पिता पितामहः सोमं न पिबेत् १ ऋत्विजो वृणीते । अथर्वाङ्गिरोविदं ब्रह्माणम् । सामविद-मुद्गातारम् । ऋग्विदं होतारम् । यजुर्विदमध्वर्युम् २ ब्राह्मणाच्छंसी पोताग्नीध्र इति ब्रह्मणोऽनुचराः । सदस्यश्च । प्रस्तोता प्रतिहर्ता सुब्रह्म-ण्य इत्युद्गातुः । मैत्रावरुणोऽच्छावाको ग्रावस्तुदिति होतुः । प्रति-प्रस्थाता नेष्टोन्नेतेत्यध्वर्योः ३ वसन्तादिषु यथावर्णं देवयजनमित्युक्तम् ४ यस्य श्वभ्र ऊषो वृक्षः पर्वतो नदी पन्था वा पुरस्तात्स्यान्न देवय-जनमात्रं पुरस्तात्पर्यवशिष्येत् ५ सोमरूपाण्यनुध्यायेत् ६ दीक्षणीया-यामाग्नावैष्णवम् ७ पत्नीसंयाजान्ता ८ दीक्षितोऽभ्यञ्जनमित्यभ्यज्य-मानो जपति ९ पुनन्तु मेति पाव्यमानः १० सुत्रामाणमिति कृष्णाजिन-मुपवेशितः ११ दीक्षितावेदनात्कामं चरन्ति १२ अस्तमिते वाग्वि-सर्जनादस्तंयते नम इति नमस्कृत्य नक्षत्राणां मा संकाशश्च प्रतीका-शश्चावतामिति नक्षत्राण्युपतिष्ठते १३ दक्षिणेनाग्निं कशिप्वेत्यादि वी-क्षणान्तम् १४ पुनः प्राण इति मन्त्रोक्तान्यभिमन्त्रयते १५ आदित्यस्य मा संकाश उद्यते नम इत्यादित्यमुपतिष्ठते १६ व्रतानि १७ अप्रत्यु-त्थायिकोऽनभिवादुकः १८ न नाम गृह्णाति विचक्षणोत्तरं ब्राह्मणस्य चनसितोत्तरं प्राजापत्यस्य १९ न दानहोमपाकाध्ययनानि । न वसूनि २० कृष्णाजिनं वसीत २१ कुरीरं धारयेत् २२ मुष्टी कुर्यात् २३ अङ्गुष्ठप्रभृतयस्तिस्त्र उच्छ्रयेत् २४ मृगशृङ्गं गृह्णीयात्तेन कषेत २५ यस्य वाग्वायता स्यान्मुष्टी वा विसृष्टौ स एतानि जपेत २६ १ ११

अग्निहोत्रं च मा पौर्णमासश्च यज्ञः पुरस्तात्प्रत्यञ्चमुभौ कामप्रौ भूत्वा क्षित्या सहाविशताम् । वसतिश्च मामावास्यश्च यज्ञः पश्चात्प्राञ्चम् । मनश्च मा पितृयज्ञश्च यज्ञो दक्षिणत उदञ्चम् । वाक्च मेष्टिश्चोत्तरतो

दक्षिणाञ्चम् । रेतश्च मान्नं चेत ऊर्ध्वम् । चक्षुश्च मा पशुबन्धश्च यज्ञो-ऽमुतोऽर्वाञ्चमिति १ दीक्षान्ते च वसुसंपत्तये २ नैनं बहिर्वेद्यभ्युदि-यान्नाभ्यस्तमियात् । नाधिष्ण्ये प्रतपेत् ३ सत्यं वदेत् ४ व्रतलोपे यदस्मृतीत्यग्निमुपतिष्ठते ५ सत्यं बृहदिति लोष्टमादाय शुद्धा न आप इति मूत्रपुरीषे क्षारयति । पवित्रेण पृथिवीति लोष्टेनात्मानमुत्पुनाति ६ य ऋते चिदिति शीर्णं दण्डाद्यभिमन्त्रयते । स्वप्नेषूक्तं दिवो नु मामिति च ७ यदत्रापि मधोरहं निरष्टविषमस्मृतम् । अग्निश्च तत्सविता च पुनर्मे जठरे धत्तामिति जाम्बीलस्कन्दन आत्मानमनुमन्त्रयते ८ यदत्रापि रसस्य मे परा पपातास्मृतम् । तदिहोपह्वयामहे तन्मा आप्या-यतां पुनरिति रेतसः ९ परोऽपेहीत्यशस्तशंसने १० अश्मन्वतीत्यपां तरणे ११ अपः समुद्रादित्यनाच्छादिताभिवर्षणे १२ अव ज्यामिवेति क्रोधे १३ ऋतुमतीं जायां सारूपवत्सं श्रपयित्वाभिघार्योद्वास्यो-द्धृत्याभिहिङ्कृत्य गर्भवेदनपुंसवनैः संपातवन्तं परामेव प्राशयेत् १४ २ १२

तिस्रो दीक्षा अपरिमिता वा । द्वादशाहीनस्य १ दोक्षान्ते प्रायणीयायां पथ्यायाः स्वस्तेरग्नेः सोमस्य सवितुरदितेः पथ्या रेवतीर्वेदः स्वस्ति-रिति २ शंय्वन्ता ३ ध्रौवस्य पूर्णाहुतिम् ४ यस्योरुष्विति निष्क्रम्य सोमक्रयणीं प्रपाद्यमानां दिवं च रोहेत्यनुमन्त्रयते ५ पदाभिहोममि-डायास्पदमिति ६ उपरवदेशे चर्मणि सोममभि त्यमिति हिरण्यपा-णिर्विचिनोति ७ अयं सहस्रमित्यनुमन्त्रयते ८ क्रीते कुरीरं निर्मुष्णाति ९ उदायुषेत्युत्तिष्ठति १० प्रोह्यमाणेऽप्रतिरथं जपति ११ ध्रुवं ध्रुवेणेति राजानं राजवहनादासन्द्यां नीयमानमनुमन्त्रयते १२ दक्षिणेनाग्निमा-स्थापित आतिथ्यायां हविरभिमृशन्ति यज्ञेन यज्ञमिति १३ वैष्णवं विष्णोर्नु कमिति १४ इडान्ता १५ तानूनप्त्रपात्रे पञ्चकृत्वोऽवद्यत्या-ज्यमापतये त्वा गृह्णामि परिपतये त्वा तनूनप्त्रे त्वा शाक्वराय त्वा शक्मन ओजिष्ठाय त्वेति १६ तदभिमृशन्ति १७ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तिः । अनु मे दीक्षां दीक्षापति-

र्मन्यतामनु तपस्तपस्पतिः । अञ्जसा सत्यमुपगेषं स्विते मा धा इति दीक्षालिङ्गं दीक्षितो १८ अध्वर्युराग्नीध्रमाहाग्नीन्मदन्त्यापा३ इति १९ आग्नीध्रो मदन्ति देवीरमृता ऋतावृत इति २० अध्वर्युस्ताभिरुदेहीति २१ आग्नीध्रस्ताः कुशैरुदानयति २२ ता उपस्पृश्य सोममाप्याययन्ति अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ॥ आप्याययास्मान्त्सखीन्त्सन्या मेध-या प्रजया धनेन स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति २३ पुनरुपस्पृश्योत्तानहस्ताः प्रस्तरे निहूवत एष्टा राय एष्टा वामानि प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति २४ प्रवर्ग्याय पुरस्ताद्धोमान्हुत्वा गार्हपत्यं दक्षिणेनोपविशति २५ न प्रथमयज्ञे प्र-वर्ग्यं कुर्वीत । काममनूचानः श्रोत्रियः २६ अन्तर्धायाध्वर्युराह ब्रह्म-न्घर्मेण प्रचरिष्याम इति २७ प्रचरत घर्ममित्यनुजानाति २८ उच्चैः सर्वमुपांशु वा २९ घर्मं ताप्यमानुमुपासीत ३० ३ १३

घर्मं तपाम्यमृतस्य धारया देवेभ्यो हव्यं परिदां सवित्रे
शुक्रं देवाः शृतमदन्तु हव्यमासञ्जुह्वानममृतस्य योनौ ॥

देवानामधिपा एति घर्म ऋतेन भ्राजन्नमृतं विचष्टे
हिरण्यवर्णो नभसो देव सूर्यो घर्मो भ्राजन्दिवो अन्तान्पर्येषि विद्युता

वैश्वानरः समुद्रं पर्येति शुक्रो घर्मो भ्राजन्तेजसा रोचमानः
नुदञ्छत्रून्प्रदहन्मे सपत्नानादित्यो द्यामध्यरुक्षाद्विपश्चित्

विद्योतते द्योतत आ च द्योतत अप्स्वन्तरमृतो घर्म उद्यन्
हन्ता वृत्रस्य हरितामनीकमनाधृष्टास्तन्वः सूर्यस्य

घर्मः पश्चादुत घर्मः पुरस्तादयोदंष्ट्राय द्विषतोऽपि दध्मः
वैश्वानरः शीतरूरे वसानः सपत्नान्मे द्विषतो हन्तु सर्वान्

ऋतूनृतुभिः श्रपयति ब्रह्मणैकवीरो घर्मः शुचानः समिधा समिद्धः

ब्रह्म त्वा तपति ब्रह्मणा तेजसा च घर्मः साहस्रः समिधा समिद्धः
सपत्नाः प्रदिशो मे भवन्तु

सपत्नान्सर्वान्मे सूर्यो हन्तु वैश्वानरो हरिः
घर्मस्तप्तः प्रदहतु भ्रातृव्यान्द्विषतो वृषा
उद्यन्मे शुक्र आदित्यो विमृधो हन्तु सूर्यः

ब्रह्म जज्ञानमियं पित्र्येति शस्त्रवदर्धर्चश आहावप्रतिगरवर्जम् १ रुचिरसीति रुचितमनुमन्त्रयते २ घर्मदुग्धोहायोत्तिष्ठत उत्तिष्ठताव पश्यतेति ३ उप हूय इति घर्मदुघाम् ४ घर्मसूक्तेन घर्मं हूयमानं स्वाहाकृत इति द्वाभ्याम् ५ घर्मस्य वषट्कृते ऽनुवषट्कृते भक्षो वाजिनवत् ६ शृतं हविर्मधु हविरश्वावते । घर्म मधुमतः पितृमतो वाजिमतो बृहस्पतिमतो विश्वदेव्यावत इति सन्त्रे होताध्वर्यु- र्गृहपतिर्ब्रह्मोद्गाता ७ अनुचरा गृहपतिश्चोच्छिष्टखरे पवित्रैर्मार्जयन्ते ८ सूयवसादिति त्रिरुक्तायां संस्थितहोमान् ९ ४ १४

उपसद्याग्नेयसौम्यवैष्णवान् १ वषट्कारान्ताप्यायनान्निह्नवते २ यत्रा- हाध्वर्युरग्नीद्देवपत्नीर्व्याचक्ष्वेति तदपरेण गार्हपत्यं प्राङ्मुखस्तिष्ठन्ननवा- नन्नाग्नीध्रो देवपत्नीर्व्याचष्टे । पृथिव्यग्नेः पत्नी वाग्वातस्य पत्नी सेनेन्द्रस्य पत्नी धेना बृहस्पतेः पत्नी पथ्या पूष्णः पत्नी गायत्री वसूनां पत्नी त्रिष्टु- ब्रुद्राणां पत्नी जगत्यादित्यानां पत्न्यनुष्टुब्मित्रस्य पत्नी विराड्वरुणस्य पत्नी पङ्क्तिर्विष्णोः पत्नी दीक्षा सोमस्य राज्ञः पत्नीति ३ सुब्रह्मण्याह्वाने सर्वत्र यस्यां सद इति तिस्रो जपति ४ एवमपराह्णे घर्मोपसदौ । अपरेद्युः पूर्वाह्णेऽपराह्णे चौपवसथ्ये समासे ५ एवं तिस्रोऽग्निष्टोमस्य । द्वादशाहीनस्य ६ वि मिमीष्वेति वेदिं मिम नमनुमन्त्रयते ७ यस्यां वेदिमिति वेदिं परिगृह्यमाणाम् ८ अग्नौ प्रणीयमानेऽग्ने प्रेहीति जपित्वा बहिर्वेद्युपविशति ९ दक्षिणहविर्धानस्य वर्त्माभिहोममिदं विष्णुरिति । उत्तरस्य त्रीणि पदेति १० हविर्धाने प्रवर्त्यमाने इतश्च मेति द्वाभ्या- मनुमन्त्रयते ११ विष्णोर्नु कमित्युपस्तम्भनमुपस्तभ्यमानम् १२ मन्वे

वां द्यावापृथिवी इत्यौदुम्बर्या अभिहोमम् १३ अग्नीषोमयोः प्रणयना-
यामन्त्रितस्तीर्थेन पत्नीशालमाव्रजति । चात्वालोत्करावन्तरेणाग्नी-
ध्रीयलक्षणमुत्तरेण सदश्चेति तीर्थम् १४ आचमनादि वीक्षणान्तम् १५
सोमं राजानमित्यर्धर्चेनाग्नीषोमौ प्रणीयमानावनुव्रजति १६ आग्नीध्री-
यहोमादाग्नीध्रीयमुत्तरेणाग्निमपरेणातिव्रज्यासाद उपविशति १७ अ-
थाग्नीषोमीये पशावुक्ता धर्माः । एतेन पशवो व्याख्याताः १८ पत्नी-
संयाजान्ताः १९ ५ १५

वसतीवरीः परिह्वियमाणाः पूर्णमध्वर्यो प्रभरेत्यनुमन्त्रयते १ आग्नीध्रीये
स्थाप्यमाना उत्तरयामूर्या इति च २ दीक्षितस्तत्र वसति ३ अपररात्र
ऋत्विजः प्रबोधिताः शालाद्वार्येऽप उपस्पृशन्ति ४ हविरुपावहृत
इत्यादि वैश्वानरोऽग्निष्टोम इत्यन्ताभिर्यज्ञतनूभिः पुरा प्रचरितोराग्नीध्रीये
जुहोति ५ यजूंषि यज्ञ इति च विष्पर्धायां चतुर्भिश्चतुर्भिः पुरस्तात्प्रा-
तरनुवाकस्य ६ एनं दक्षिणेनाहवनीयमपरेणातिव्रज्यासाद उपविश-
ति ७ उपविष्टे होतरि होतारं यदस्मृतीति हूत्वा पुरस्ताद्धोमाञ्जुहोति
८ पातं न इन्द्रापूषणेति चत्वारि सूक्तानि प्रातरनुवाकमनुजपति ९
अम्बयो यन्तीति त्रीण्यपोनप्त्रीयम् १० इन्द्र जुषस्वेति राज्ञेऽभिषूयमा-
णेऽभिषवणहोमाञ्जुहोति । उपांशुग्रहहोमम् । सूर्यो द्यामित्युदितेऽंत-
र्यामीयं च ११ हविर्धाने पूर्वेणातीत्य खरे चोपविश्य दिवस्पृथिव्या
इति मधुसूक्तेन राजानं संश्रयति १२ इन्द्राय सोममृत्विज इति द्रोणक-
लशस्थमनुमन्त्रयते १३ धृषत्पिबेति माध्यंदिने १४ यत्र विजानाति
ब्रह्मन्त्सोमोऽस्कन्निति तमेतयालभ्याभिमन्त्रयते

अभूद्देवः सविता वन्द्यो नू न इदानीमह्न उपवाच्यो नृभिः
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधदिति १५

ये अग्नयो अप्स्वन्तरिति सप्तभिरभिजुहोति १६ अध्वर्युः प्रतिप्रस्थाता
प्रस्तोतोद्गाता प्रतिहर्ता ब्रह्मा सुन्वन्समन्वारब्धा बहिष्पवमानाय वि-
सृप्य वैप्रुषान्होमाञ्जुह्वति द्रप्सश्चस्कन्देति

यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात्
अध्वर्योर्वा परि यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतम्

द्रप्सः पातीतोऽत्यस्यवश्च यः परः स्रुचः
अयं देवो बृहस्पतिः सं तं सिञ्चतु राधसे

यस्ते द्रप्सः पतितः पृथिव्यां धानासोमः परीवापः करम्भः ।
अयं देवो बृहस्पतिः सं तं सिञ्चतु वर्चसे

यन्मे स्कन्नमिति १७ ६ १६

चात्वालाद्दक्षिणत उपविशन्ति १ दोषो गायेति जपन्नुद्गातारमीक्षते २ स्तोत्रोपाकरणात्प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन्स्तोष्यामः प्रशास्तरिति ३ तत्र रश्मिरसि क्षयाय त्वा क्षयं जिन्व । सवितृप्रसूता बृहस्पतये स्तुत । देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज । आयुष्मत्या ऋचो मापगाया तनूपात्साम्नः । सत्या व आशिषः सन्तु सत्या आ-कूतयः । ऋतं च सत्यं च वदत । बृहस्पतेऽनुमत्यों भूर्जनदिन्द्रवन्त इत्युक्त्वा स्तुतेति प्रथमया स्वरमात्रया प्रसौति । मध्यमया माध्यंदिने । उत्तमया तृतीयसवने ४ भुव इति माध्यंदिने । स्वरिति तृतीयसवने ५ उक्थ्यादिष्वहीने चों भूर्भुवः स्वर्जनद्वृधत्करदुहन्महत्तच्छमोमिति च ६ विष्पर्धमानयोः सवृतसोमयोः स्तोमभागानामुपर्युपरि स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः सवे । बृहस्पतिं वः प्रजापतिं वो वसून्वो टेवान् रुद्रान्वो देवानादित्यान्वो देवान्साध्यान्वो देवानाप्त्यान्वो देवान्वि-श्वान्वो देवान्सर्वान्वो देवान्विश्वतस्परि हवामहे । जनेभ्योऽस्माकमस्तु केवल इतः कृणोतु वीर्यमिति जपन्परेषां ब्रह्माणमवेक्षेत ७ स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वत् । ऊर्जं मह्यं स्तुतं दुहामा मा स्तुतस्य स्तुतं गमेत् । इन्द्रियावन्तो हवामहे धुक्षीमहि प्रजामिषम् । सा मे सत्या-शीर्देवेष्वस्तु । ब्रह्मवर्चसं मा गमयेदिति स्तोत्रमनुमन्त्रयते ८ इन्द्रस्य कुक्षिरित्यासिक्ते मोमे पूतभृतम् ९ स्तुते बहिष्पवमाने वाचयति

श्येनोऽसीति । वृषासीति माध्यंदिने । ऋभुरसीत्यार्भवे १० ब्राह्म-णोक्तानित्यनुब्राह्मणिनः ११ अथाध्वर्युराहाग्नीदग्नीन्विहर बर्हि स्तृणीहि परोडाशानलंकुर्विति १२ ७ १७

आग्नीध्र आग्नीध्रीयादङ्गारैर्द्वे सवने विहरति । शलाकाभिस्तृतीय-सवनम् । प्रत्यङ्मुखो होतृमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानां धिष्ण्येषु मार्जालीये १ तत्रैव प्रत्यानयति २ अनु पृष्ट्यामास्तीर्य पुरोडाशानलंकुरुते ३ ये अग्नयो विहृता धिष्ण्याः पृथिवीमनु । ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्ते नो मा हिंसिषुरिति विहृताननुमन्त्रयते । उत्तरयोः सवनयोः पुनर्मैत्विन्द्रियमिति । आहवनीयमपरेणेत्युक्तम् ४ प्रवृताः प्रवृताहुतीर्जुह्वति जुष्टो वाचे भुयासं जुष्टो वाचस्पतये देवि वाग्यद्वाचो मधुमत्तमं तस्मिन्मा धाः स्वाहा । वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहेति । मनसा चतुर्थीम् ५ सप्providingाहुतीरित्येके सरस्वते स्वाहा महोभ्यः संमहोभ्यः स्वाहा । ऋचा स्तोममिति ६ वपामार्जनान्त उपोत्थाय दिवस्पृष्ठ इत्यादित्यमुपतिष्ठन्ते ७ मा प्र गा-मेत्याव्रज्याहवनीयं निर्मथ्यं यूपमादित्यमग्नयः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माग्नयः पिपृत माग्नयो गोपायत मा नमो वोऽस्तु मा मा हिंसिष्टेति ८ आग्नीध्रीयमुत्तरेण सदोऽभिव्रजन्ति ९ धिष्ण्यवन्तो यजमानश्च पूर्वया द्वारा प्रसर्पन्ति । अपरेऽपरया १० सदः प्रसृप्स्यन्तो धिष्ण्यान्नमस्कुर्वन्ति धिष्ण्येभ्यो नमो नम इति ११ द्रष्ट्रे नम इति द्रष्टारं प्रसर्पन्तः । उपश्रोत्रे नम इत्युपश्रोतारम् १२ चात्वालोत्करशामित्रो-वध्यगोहास्तावाग्नीध्रीयाच्छावाकवादं मार्जालीयं खरं धिष्ण्यान-न्यांश्चोपतिष्ठन्तेऽग्नयः सगरा स्थेति १३ उर्वन्तरिक्षं वीहीति सदोऽभि-मृशन्ति । देवीर्द्वारो मा मा संताप्तं लोकं मे लोककृतौ कृणुतमिति द्वार्ये १४ प्रसृप्यानुख्यात्रे नम इत्यनुख्यातारम् । उत्तरेण धिष्ण्या-न्परिक्रम्य स्वं स्वं धिष्ण्यमभिप्रसृप्ता उपद्रष्ट्रे नम इत्युपद्रष्टारम् १५ उपविश्य जपन्त्यभि त्वेन्द्रेति स्तोत्रम् १६ यजमानः सदस्यो ब्रह्माणं दक्षिणेन स्तोत्रानुमन्त्रणाज्जनदिति मनसा १७ विसंस्थिते यथाधिष्ण्य-

मुत्तरेण पूर्वया द्वारा निष्क्रामन्ति । मैत्रावरुणधिष्ण्यमधिष्ण्यवन्तः
१८ ८ १८

सवनीयपुरोडाशानामैन्द्रान् १ द्विदेवत्यानामैन्द्रवायवस्य होमौ वा-
युरन्तरिक्षस्येन्द्रवायू इति २ मैत्रावरुणस्य मित्रावरुणौ वृष्ट्या इति ३
आश्विनस्याश्विना ब्रह्मणेत्यर्धर्चेन ४ प्रस्थितैश्चरिष्यन्नध्वर्युः संप्रेष्यति
होतर्यज प्रशास्तर्ब्राह्मणाच्छंसिन्पोतर्नेष्टरग्नीदिति ५ इन्द्र त्वा वृषभं व-
यमिति ब्राह्मणाच्छंसी यजति । उत्तराभ्यां पोत्राग्नीध्रौ ६ याज्या-
नामन्तः प्लवते ७ ये३ यजामहे वौ३षडित्याद्यन्तावादिप्लुतावनवानम्
८ प्रातःसवने वषट्कृत्य वागोजः सह ओजो मयि प्राणापानावि-
त्यनुमन्त्रयते ९ सोमस्याग्ने वीहीत्यन्तप्लुतेनानुवषट्कुर्वन्ति १० शुक्र-
मन्थिचमसहोमानैन्द्रानिन्द्रो दिव इति ११ अनुवषट्काराणामा देवा-
नामित्यनुहोमांश्च मैत्रावरुणमैन्द्रं मारुतं त्वाष्ट्रमाग्नेयम् १२ अग्नीधेष्टे-
ऽध्वर्युराहायाडग्नीदिति । अयाडित्यग्नीत् १३ पूर्ववदिडाभक्षः १४
सदसि सोमान्भक्षयन्त्युपहूताः प्राशित्रवत् १५ प्रतीक्ष्य प्रतिगृह्या-
ग्निहुतस्येन्द्रपीथस्येन्दोरिन्द्रियावतः । यो भक्षो गोसनिरश्वसनिर्धन-
सनिः प्रजासनिर्लोकसनिः । तस्य त उपहूतस्योपहूतो भक्षयामि गाय-
त्रेण छन्दसा तेजसा ब्राह्मणवर्चसेनेति १६ त्रैष्टुभेनेति माध्यांदिने ।
जागतेनेति तृतीयसवने । अनुष्टुप्छन्दसेति पर्यायेषु । पङ्क्तिच्छन्दसेति
संधिचमसेषु । अतिच्छन्दसेत्यप्तोर्याम्णि १७ भक्षित आत्मानं प्रत्यभि-
मृशन्ति

शं नो भव हृद आ पीत इन्द्रो पितेव सोम सूनवे सुशेवः
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः

हिन्वा मे गात्रा हरिवो गणान्मे मा व्यरीरिषः
शिवो मे सप्तर्षीनुपतिष्ठ मामेवा ग्राभिरभिगा इति १८

चमसानाप्याययन्त्या प्यायस्व सं ते पयांसीति १९ तत्र श्लोकः

पञ्चैव कृत्वश्चमसान्यज्ञ आप्याययेत्कविः

आज्ये मरुत्वतीये च प्रस्थिताश्चापि सर्वश इति २० अच्छावाकचम-
सहोममैन्द्राग्नम् २१ यद्यश्नन्त्याग्नीध्रीये २२ सदस्युपविष्टा यथा-
प्रैषमृतून्यजन्ति मरुतः पोत्रादिति २३ ६ १६

प्रथमोत्तमाभ्यां पोता । द्वितीययाग्नीध्रः । तृतीयया ब्राह्मणाच्छंसी १
यजमानोऽतिप्रेष्यति होतरेतद्यजेति २ नानुवषट्कुर्वन्ति ३ तत्र श्लोकः
द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः आदित्यग्रहसावित्रावेते
नानुवषट्कृता इति ४ ऋतुहोमानैन्द्रं मारुतं त्वाष्ट्रमाग्नेयमैन्द्रं मैत्रावरुणं
चतुरो द्राविणोदसानाश्विनं गार्हपत्यम् ५ ऋतुपात्रे भक्षयन्ति लिम्पन्ति
वावजिघ्रन्ति वा कोऽसि यशोऽसि यशोदा असि यशो मयि धेहीति
६ नाराशंसांस्तूष्णीं प्रतिगृह्य भक्षयन्ति नराशंसपीतस्य देव सोम ते नृ-
भिःष्टुतस्य मतिविदः । ऊमैः पितृभिर्भक्षितस्योपहूतस्योपह्वतो भक्षया-
मीति ७ ऊर्वैरिति माध्यंदिने । काव्यैरिति तृतीयसवने ८ मनो
न्वा हुवामहीति मन उपाह्वयन्ते ९ पञ्चकृत्वो नाराशंसान्भक्षयन्ति १०
तत्र श्लोकः पञ्चैव कृत्वश्चमसान्नाराशंसेषु भक्षयेत् होतुः पूर्वेषु शस्त्रेषु
यानि प्रागाग्निमारुतादिति ११ आज्यशस्त्रादैन्द्राग्नम् १२ होत्रे प्रउग-
स्तोत्राय प्रसौति प्रेतिरसि धर्मणे त्वा धर्मं जिन्व । मैत्रावरुणायान्वि-
तिरसि दिवे त्वा दिवं जिन्व । ब्राह्मणाच्छंसिने संधिरस्यन्तरिक्षाय
त्वान्तरिक्षं जिन्व । अच्छावाकाय प्रतिधिरसि पृथिव्यै त्वा पृथिवीं
जिन्वेति १३ प्रउगशस्त्राद्वैश्वदेवम् । मैत्रावरुणस्य मैत्रावरुणम् ।
ब्राह्मणाच्छंसिन ऐन्द्रम् । अच्छावाकस्यैन्द्राग्नम् १४ ब्राह्मणाच्छंस्यु-
त्तमात्प्रतीहारात्त्रिर्हिङ्कृत्य शंसावोमित्यध्वर्युमाह्वयते १५ हिङ्कारमनु-
रूपायोक्थमुखाय परिधानीयायै प्रगाथाय च १६ माध्यंदिनेऽयोनय
एके १७ अध्वर्यो शंसावोमिति स्तोत्रियाय अध्वर्यो शंशंसावोमिति
तृतीयसवने १८ आहावेषु शंसावो दैवेत्यध्वर्युः प्रतिगृणाति १९ ओ-
थामो दैवेत्यवसाने । ओमोथामो दैवेति प्रणवे । ओमिति शस्त्रान्त

उक्थसंपत्सु २० ओमुक्थशा यजोक्थशा इति साम्ना शस्त्रमुपसंतनो-त्यर्धर्चशो मन्द्रया वाचा । बलीयस्या माध्यंदिने । बलिष्ठतमया तृतीयसवने । उत्तरिरयोत्तरिरयोत्सहेदा समापनात् २१ १० २०

आ याहि सुषुमा हि त आ नो याहि सुतावत इति स्तोत्रियानुरूपौ १ अयमु त्वा विचर्षण इत्युक्थमुखम् । उद्धेदभि श्रुतामघमिति पर्यासः । उत्तमा परिधानीया २ त्रिष्प्रथमां त्रिरुत्तमामन्वाह ३ अर्धर्चशस्य ऋगन्तं प्रणवेनोपसंतनोति स्वरादिमपनीय । पच्छःशस्येऽर्धर्चान्तं शस्त्रान्तं मकारान्तेनैव ४ शस्त्रोक्थं वाचीत्याह । उक्थं वाचीन्द्रायेति माध्यंदिने । उक्थं वाचीन्द्राय देवेभ्य इति तृतीयसवने ५ उक्थ्य-संपदः परिधानीयोत्तरा याज्या ६ अच्छावाकभक्षादग्निः प्रातःसवने श्येनोऽसि यथा सोमः प्रातःसवन इति यथासवनमाज्यं जुहोति ७ संस्थितहोमान् ८ संस्थितेसंस्थिते सवने वाचयति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ९ प्रेषिता माध्यंदिनायौदुम्बरीम-भ्यपरया द्वारा निष्क्रम्याग्नीध्रीयात्सर्पन्ति । यजमानः पूर्वया १० पुरस्ताद्धोमान् ११ उक्तमभिषवादि १२ पवमानाय सदः प्रसर्पन्ति १३ आमन्त्रितः प्रसौति विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेति १४ विहरणे धिष्णयवान्बहिश्चेद्धिष्णयमभ्येत्य परि त्वाग्न इति जपति १५ ब्रह्मा च १६ दीक्षितो बहिर्वेद्यभ्याश्रावणेऽस्तमयेऽभ्युदये वाग्नय उपा-ह्वयध्वमिति १७ श्रातं मन्य इति दधिघर्महोमम् १८ घर्मवद्भक्षः १९ रसप्राशन्या पशुपुरोडाशस्य २० एवा पाहीति प्रस्थितयाज्या २१ प्रस्थितहोमानैन्द्रान् २२ गार्हपत्ये दाक्षिणहोमावुदु त्यं चित्रं देवा-नामिति २३ हिरण्यहस्तो यजमानो बहिर्वेदि दक्षिणा आयतीरा गाव इति प्रत्युत्तिष्ठति २४ हिरण्यमात्रेयाय ददाति । आग्नीध्रायोपबर्हणम् २५ अग्रेण गार्हपत्यं जघनेन सदोऽन्तराग्नीध्रीयं च सदश्च चात्वालं चोदीचीर्दक्षिणा उत्सृज्यमानाः सं वः सृजत्विति द्वाभ्यामनुमन्त्रयते २६ ११ २१

यस्यां पूर्वे भूतकृत इति भागलिः । इहेदसाथेति कौशिकः १ अन्ततः प्रतिहर्त्रे देयम् २ मरुत्वतीयहोममिन्द्रो मा मरुत्वानिति ३ शस्त्रया-ज्याया होत्रादिभ्यः प्रसौति प्रवास्यह्ने त्वाहर्जिन्व । अनुवासि रात्र्यै त्वा रात्रिं जिन्व । उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व । प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्वेति ४ निष्केवल्यस्य माहेन्द्रम् ५ प्रशास्त्रादी-नामैन्द्रम् ६ तं वो दस्ममृतीषहं तत्त्वा यामि सुवीर्यमिति स्तोत्रियानुरुपौ ७ द्वे तिस्रः करोति पुनरादायम् । प्रथमां शस्त्वा तस्या उत्तमं पादम-भ्यस्यावसायोत्तरस्या अर्धर्चेन द्वितीयां शस्त्वा तस्या उत्तमं पाद-मभ्यस्योत्तरेणार्धर्चेन तृतीयां शंसति ८ एवं बार्हतानां स्तोत्रियानुरू-पाणां प्रग्रथनम् ९ मध्यमोच्चैस्तरया वाचा शंस्तव्यौ १० उदु त्ये मधुमत्तमा इति सामप्रगाथः स्वरवत्या ११ इन्द्रः पूर्भिदातिरदि-त्युक्थमुखं पच्छह् प्रतिवीततमया १२ उदु ब्रह्माण्यैरत श्रवस्येति पर्यासः १३ एवेन्दिन्द्रमिति परिदधाति । परया यजति १४ अच्छा-वाकभक्षादादित्यग्रहहोमं यद्देवा देवहेडनमिति द्वाभ्यां पवमान-सर्पणान्तम् १५ आशिरं पूतभृत्यासिच्यमानमाशीर्ण ऊर्जमित्यनुमन्त्रयते १६ पवमानाय प्रसौति सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वेति १७ अवदानहोममाग्नेयम् १८ ऐन्द्राग्नमुक्थ्ये । ऐन्द्रं षोडशिनि । सार-स्वतमतिरात्रे १९ पश्वेकादशिन्यामाग्नेयं सौम्यं वैष्णवं सारस्वतं पौष्णम् बार्हस्पत्यं वैश्वदेवमैन्द्रमैन्द्राग्नं सावित्रं वारुणम् २० सवनीयहोमा-दिन्द्रश्च सोमं पिबतं बृहस्पत इति प्रस्थितयाज्याहोमानैन्द्रं मैत्राव-रुणमैन्द्राबार्हस्पत्यं मारुतं त्वाष्ट्रमैन्द्रावैष्णवमाग्नेयम् २१ हविर्धाने यथाचमसं दक्षिणतः स्वेभ्य उपासनेभ्यस्त्रींस्त्रीन्पुरोडाशसंवर्तानेतत्ते प्रततामहेति निपृणन्ति २२ अत्र पितर इति जपित्वैतं भागमेतं सधस्थाः श्येनो नृचक्षा इत्यनुमन्त्रयते २३ १२ २२

आग्नीध्रीये हविरुच्छिष्टं भक्षयन्ति १ सावित्रग्रहहोमम् २ वैश्वदे-वयाज्याया धिष्ण्यहोमादैभिरग्न इत्युपांशु पात्नीवतस्याग्नीध्रो यजति ३ तस्य होमम् ४ नेष्टुरुपस्थे धिष्ण्यान्ते वासीनो भक्षयति ५ अग्नि-

